## ॥ अथ क्षेमेन्द्रविरचितबृहत्कथामञ्जर्यन्तर्गतपञ्चतन्त्रसारः ॥

### ॥ प्रथमं तन्त्रम् ॥

दाक्षिणात्ये जनपदे विबुधव्रातसेवितम् ।
महिलारोप्यनामास्ति[1] पुरं सुरपुरोपमम्[2] ॥ १ ॥
वर्धमानकनामाभूत्तत्रातिधनदो वणिक् ।
प्रस्थितो द्वीपयात्रायां[3] स विवेश महावनम् ॥ २ ॥
तत्रास्य विषमग्रावविदीर्णपदविक्लवः[4] ।
धुर्यो ऽवसन्नो[5] वृषभो वृषाङ्कवृषसंमितः[6] ॥ ३ ॥
याते वणिग्वरे त्यक्तस्तन्नियुक्तैः स रक्षिभिः ।
नवौषधिचयाहारः[7] कालेन स्वास्थ्यमाययौ[8] ॥ ४ ॥
पीननन्द्याकृतिबले[9] तस्मिन्संजीवकाभिधे[10] ।
निर्झरोपान्तसस्येषु[11] स्वच्छन्दसुखचारिणि[12] ॥ ५ ॥
उदकार्थं समभ्यायात्पिङ्गलाख्यो मृगाधिपः ।
वनं यत्केसरैः स्फारैः[13] साट्टहासमिवाभवत्[14] ॥ ६ ॥

1 B. मिहिला°. 2 B. पुरं सुरोत्तमं. 3 P. देवयात्रायां. 4 P. विषमे मार्गे विदीर्णपदविक्रियः. 5 P. विषण्णो. 6 P. °वृषसंनिभः. 7 P. वनौषधीवपाहारः. 8 B. स्वास्थ्यमा°. 9 B. पीनदर्पाकृतिजले, P. पीनदर्पाकृतिबलो. 10 B. संजीका° (sic), P. fährt fort जातः संजीवकाभिधः. 11 B. hat °पारीषु statt °सस्येषु, P. निर्जनोपांत°. 12 B. °वारिणि. 13 P. यत्केसरिरवैः. 14 B. साट्टहास°.

स शुश्राव[1] वृषस्योग्रशृङ्गाघातस्फुटे तटे[2]।
टांकारनादमुखरे[3] हुंकारानिबिडध्वनिम्[4] ॥ ७ ॥
श्रुत्वा तदुग्रनिनदं विमर्शस्थगितक्रमः[5]।
स तस्थौ फुल्लरोमाञ्चैः पीनलाङ्गूलपल्लवः[6] ॥ ८ ॥
करटो दमनश्चैव सचिवौ तस्य जम्बुकौ।
दूरतश्चित्तसंक्षोभं विलोक्य स्वैरमूचतुः ॥ ९ ॥
पूर्वसंस्कारयोगेन सत्त्वान्मुनिवरेण[7] वा।
संस्फुटोच्चरति प्रायः पशूनामपि भारती[8] ॥ १० ॥
ततोऽब्रवीद्दमनकः[9] सखे किमयमीश्वरः।
अदृष्टशब्दमात्रेण क्षोभाकुल इवेक्ष्यते ॥ ११ ॥
तच्छ्रुत्वा धीमतां धुर्यो हसन्करटकोऽब्रवीत्।
निरर्थचिन्तायोगेन[10] किं प्रयोजनमावयोः ॥ १२ ॥
अप्रयोजनकर्ता यः स भवेद्दुःखभाजनम्[11]।
अकार्यदुर्ग्रहग्रस्तः[12] कीलाकर्षीव वानरः[13] ॥ १३ ॥

[1] B. शुश्राव. [2] B. वृषस्योग्रं शृंगाघातं स्फुटं तटे. [3] B. °मुखरं, P. टंकार°.
[4] B. und P. °निबिड°. [5] B. विषमं स्थगित°. [6] P. °रोमाञ्चपीन°. [7] B. सत्वान्मु°.
[8] P. स्फुरत्येव मतिः प्रायः पशूभवति भारती. [9] P. तत्राब्रवी°. [10] P. °चिन्तावेशेन.
[11] P. स्युः प्रयोजनकर्तारः सर्वे दुःखस्य भाजनं, B. hat सर्वथा statt स भवेत्.
[12] P. अकार्यकृद्दण्डग्रस्तः. [13] B. कीलाकर्षकवानरः, P. कीलोत्पाटीव वानरः.

॥ अथ क्षेमेन्द्रविरचितबृहत्कथामञ्जर्यन्तर्गतपञ्चतन्त्रसारः ॥

॥ प्रथमं तन्त्रम् ॥

पञ्चतन्त्रसारः ॥

॥ पञ्चतन्त्रसारः ॥

श्रूयते नगराभ्याशे[1] नवनिर्माणकारिणः ।
अर्धस्फाटितकाष्ठाग्राः[2] पुरं[3] स्थपतयो ययुः ॥ १४ ॥

गतेषु तेषु विपुलः कपिसार्थः समाययौ ।
वेल्लितानेकविन्यस्तस्तम्भादिर्भवनं ततः[4] ॥ १५ ॥

तत्रैकश्चापलात्कीलं[5] स्फाटितस्तम्भमस्तकात्[6] ।
कर्षन्नुवाच[7] केनायमस्थाने[8] विनिवेशितः ॥ १६ ॥

तस्मिन्नभ्युद्धृते[8a] यन्त्रकीलके मुष्कपीडनात् ।
स संघटितरन्ध्राग्रे[9] सहसा निधनं ययौ ॥ १७ ॥

वानराख्यायिका ॥

निशम्येति वचस्तस्य ययौ दमनकः प्रभोः[10] ।
समीपं संशयस्थाने सेवाकालो[11] हि धीमताम् ॥ १८ ॥

स विज्ञाय प्रभोश्चेतः शब्दमात्रविसंस्थुलम्[12] ।
प्राह प्रायो भवन्त्येव देव शब्दा घनादिषु[13] ॥ १९ ॥

---

1) B. नगराभ्याते, P. °भ्यासे. ~~1) B. falsch नगराभ्याते. 2) B. unrichtig ° काष्ठा°, P. अर्द्धपाटि-~~

2) B. अर्द्धस्फुटितकाष्टा°, P. अर्द्धपाटि ~~तकाष्ठास्रः. Vgl. Hab. sphuṭitārdhanihitakīlaniḥ… stambhaḥ und Pañc. अर्धस्फाटितः स्तम्भः.~~
तकाष्ठाग्राः.

3) P. पुरा. ~~vgl. jedoch Pañc. नगरमध्ये व्रजन्ति.~~

4) B. वल्लीतानैकविन्यस्तस्तम्भाविभवनिर्मितः, P. चलितानेकविन्यस्तस्तंभादिनवानामितः.

5) B. तत्रैक°, P. °कीलं. 6) P. पाटित°. 7) B. स्पृशन्नु°.

(8a) B. °भ्युद्धृते.

8) P. °मास्थाने. 9) B. स संघटितसर्वाङ्गः, P. समुद्घाटितरंध्रेत्र.
~~Vgl. Hab. Antra randhre lambitavṛṣaṇaḥ sam…~~

10) B. ~~falsch~~ प्रभो. 11) P. सदा कालो. 12) B. शब्द°.

13) ~~…~~ B. ~~hat~~ भवंदेव बाढशब्दा घनादिषु, ~~घन …~~
~~„Schlaginstrument,“ vgl. Pañc., wo die … verschiedenen … Töne verschiedener Instrumente … …~~

~~… वनादिषु.~~

P. hat für das letzte Wort वनादिषु.

मांसपूर्णेति विज्ञाय भेरीं प्रधानमन्थराम्[1]।
क्रोष्टापश्यत्समुत्पाद्य[2] पुरा काष्ठं[3] च चर्म च ॥ २० ॥
इत्युक्त्वा स्वामिनं धीमान्ययौ शब्दानुगः[4] शनैः।
विलोक्य वृषभं तत्र साक्षेपमिदमब्रवीत्[5] ॥ २१ ॥
अहो मूढ न जानीषे स्वामिनं पिङ्गलं हरिम्।
तस्मात्सेवाबाह्यस्य[6] का[7] नु रक्षा वने तव ॥ २२ ॥
तच्छ्रुत्वा शङ्कितमनास्ततः[8] संजीवको ऽभवत्। (margin: कम्पित)
दत्ताभयो ऽथ तेनैव नीतः पिङ्गलकान्तिकम् ॥ २३ ॥
स प्रणम्य प्रसादार्द्रदृशा तेनावलोकितः[9]।
कृतकृत्यमिवात्मानं मेने विगतसंभ्रमः ॥ २४ ॥
स कालेनान्तरङ्गो ऽभून्मृगराजस्य सेवकः।
आसन्न एव प्रायेण[10] नृपाः कान्ताश्च[11] सादराः ॥ २५ ॥
तयोर्विस्रम्भमालोक्य[12] बाह्यत्वादतितापिनौ[13]।
क्षुत्क्षामौ पेततुर्दुःखे[14] सचिवौ जम्बुकौ हरेः ॥ २६ ॥

---

1) B. भेरीप्रधानमंथरं, P. भेरीमध्यानमंथरां.
2) B. समुत्साद्य, 3) B. काष्टं, P. काष्ठं चर्म च. 4) P. शब्दानुगं. 5) P. सोपेक्षमिद°. 6) B. त्वस्माद°. 7) P. को.
~~8) B. कंपितमना°, P. °मना भीतः संजी°.~~
8) P. शंकितमना भीतः संजी°.
9) P. तेन विलोकितः. 10) B. प्रहूणा. 11) B. नृपाकांताश्च.
12) P. तयोर्विश्रंभ°. 13) P. बाह्यत्वा°.
14) B. °दुःखैः, ~~P. °दुःखात् (sic)~~, P. पेततुर्दुःखात्°. (margin: पेततु)

ततो दमनकः प्राह किं मया मन्दबुद्धिना ।[1]
संजीवसिंहयोः प्रीतिर्विनाशायात्मनः कृता ॥ २७ ॥[2]

उपायश्चिन्तनीयोऽत्र जाने तावद्धि भेदने ।[3]
उपायक्रमसाध्यं यद्बलसाध्यं[4] न तद्भवेत् ॥ २८ ॥

श्रूयते कृष्णसर्पो हि धिया काक्या निपातितः ।[5]
वृक्षमूलाश्रयः सर्पः[6] पुरा वायसपोतकान् ॥ २९ ॥

भक्षयामास तद्दुःखकृशाभूद्वायसप्रिया ।[7]
गोमायुकः सुहृत्पृष्टस्तस्मा तामाह दुःखिताम् ॥ ३० ॥

समाश्वसिहि सर्पोऽयं विनंक्ष्यति बको[8] यथा ।
कपटव्रतमास्थाय मत्स्यान्प्राह पुरा बकः ॥ ३१ ॥

प्रस्तुतो धीवरैर्युष्मद्ध्रदे[9] प्रातर्महाक्षयः ।[10]
युष्मद्विनाशे नष्टोऽहं यूयं वृत्तिर्यतो मम ॥ ३२ ॥

इत्युक्तिचकितान्मत्स्यान्रक्षार्थं[11] नेतुमुद्यतः ।
विश्वस्तांस्तद्ग्रयात्कालं[12] स निनाय यथारुचि[13] ॥ ३३ ॥

---

1) B. प्राह सचिवो मंदबुद्धिना. 2) P. प्रीतिर्विनाशात्मतया कृता. 3) P. जाने तयोर्विभेदने. 4) B. तंदुल° ~~(...)~~.
5) B. धिया काकेन पातितः, P. धिया काक्या निर्हिंसितः.
~~Vgl. Pañc. उपायेन हि यत्कुर्यात्तन्न शक्यं पराक्रमैः ।~~
~~काक्या कनकसूत्रेण कृष्णसर्पो निपातितः ॥~~
6) B. सर्प पुरा. 7) B. तदुःख° 8) B. विनश्यति. ~~8)~~ वको.
9) B. °युष्मत् ह्रदे, P. °युष्मद्धूधो. 10) P. भ्रातर्महाक्षयः.
11) P. इत्युक्ते चकि°, B. °मत्स्यानक्षार्थं.
12) P. hat बकस्तान्भक्षयन्कालं, ~~was wohl eine spätere Correctur ist, vgl. Hab. S. 412: matsyāç ca bhiyā viçvāsam upagatair uktam.~~ 13) B. यथारुचिः.

अतिलौल्योद्धृतेनाथ कर्कटेन[1] निपातितः।
उपायश्चिन्त्यतां सर्पवधे[2] श्रुत्वेति[3] वायसी ॥ ३४ ॥
जहार राजनिलयात्सहसा[4] हेमसूत्रिकाम्[5]।
आदाय स्वकुलायाग्रनम्रशाखावलम्बिनीम्[6] ॥ ३५ ॥
चकार ददृशुस्तां च नराः सर्पदुरासदाम्[7]।
विधाय दलशो बाणौर्व्यालमारोहणोद्यतान्[8] ॥ ३६ ॥
दृष्ट्वा[9] विलोक्य तान्काकी[10] स्वयं भूषणमत्यजत्।
काकबकाख्यायिका ॥

(margin: H योऽत्र)
अस्माभिरप्युपायांशो[11] कर्तव्यो वृषभेदने ॥ ३७ ॥
उपायेन हतः पूर्वं शशकेनापि केसरी।
अभूत्समस्तहरिणव्रातसंहारतत्परः[12] ॥ ३८ ॥

(margin: H सिंहस्तमेत्य)
सिंहः समेत्य सारङ्गाः चयार्ता इदमब्रुवन्[13]।
प्राणयात्राकृते[14] स्वामिन्कोऽयं सर्वक्षयादरः ॥ ३९ ॥
वारेण प्रेषयामस्ते मृगमेकं सदा क्षये[15]।

---

(margin: B. अतिलौल्योद्धृतेनाथ,)
1) P. अतिलोभादृतो नाथो मर्कटेन. ~~vgl. aber Pañc. I. 42.~~
~~भक्षयित्वा बहून्मत्स्यानुत्तमाधममध्यमान्।~~
~~अतिलौल्याद्बकः कश्चिन्मृतः कर्कटकग्रहात्॥~~

(margin: ~~Vgl. Pañc. I. 45: कथं स दुष्टसर्पो वध-मुपैष्यति।~~)
2) P. उपायश्चिन्त्यतां सद्यो वचः. 3) B. मृत्वेति. 4) P. °निलयात्स-सभं. 5) B. °सूत्रिकं. 6) P. °ग्रलग्नशाखा°. 7) P. ददृशुस्तं च नराः सर्पं दुरासदं. 8) B. दलशैर्वाणौर्व्यालमारोहणोद्यताः.

(margin: † B. °रप्युपायांशः,)
9) P. दृष्ट्वा 10) B. तत्काकी. 11) P. °रप्युपायोऽसौ. 12) P. °हरिणीव्रात°.
13) B. सिंह समेत्य सारंगा चयार्त्ता, P. सिंहस्तत्रत्यसारंगा चयार्ता.
14) B. प्राणायात्तिकृते. 15) P. प्रेषयामासुरेकमेकं सदा चये. B. hat क्षयं.

एवमस्त्विति सिंहस्य विज्ञाय हरिणा मतम् ॥ ४० ॥

प्रेषयामासुरव्यग्रा एकैकं कृतसंविदः ।

अथ कालेन शशको वारेण प्रेषितो हरेः ॥ ४१ ॥

अचिन्तयद्बुधः कालदंष्ट्रापातेऽप्यसंभ्रमः ।[1]

आहारकालेऽतिक्रान्ते क्षुत्क्षामे कुञ्जरद्विषि[2] ॥ ४२ ॥

गमिष्यामीति सोऽगच्छच्छशकः कुपितं हरिम् ।

गर्जता तेन पृष्टोऽसौ वेलातिक्रान्तिकारणम्[3] ॥ ४३ ॥

अब्रवीद्देव सिंहेन[4] संनिरुद्धोऽस्मि वर्त्मनि ।

श्रुत्वेति कोपादास्फाल्य लाङ्गूलं धूतकेसरः[5] ॥ ४४ ॥

सोऽवदद्दर्शय[6] क्वासौ किं मत्तोऽप्यधिको[7] हरिः ।

अग्रेसरोऽथ शशको भूत्वा करटिवैरिणः[8] ॥ ४५ ॥

वैदूर्यस्फटिकस्वच्छं[9] महाकूपमदर्शयत्[10] ।

प्रतिबिम्बाकृतिं दृष्ट्वा स्वां तत्राकुलकेसरः ॥ ४६ ॥

स कूपमग्नः प्रययौ प्रलयं शशवञ्चितः ।

भवन्त्येवमुपायेषु[11] धीमतां[11] कार्यसिद्धयः ॥ ४७ ॥

शशकाख्यायिका ॥

---

1) B. कालं दंष्ट्रापातेप्यसंभ्रमः, P. ~~but young similar~~ अचिन्तयत्क्षुधा कालदंष्ट्रापातेन संभ्रमं. ~~Vgl. Hab. J. 413: Kim aga-yain baddhimatām~~ 2) B. क्षुत्क्षामे कुञ्जर° ~~(sic)~~. 3) B. °क्रातिका°, P. °क्रांतका°. 4) B. अब्रवी°, P. अवदद्दूरसिंहेन. 5) P. धुत°. 6) P. अवदद्दर्शय. 7) P. मत्तोस्त्यधिको. 8) B. कारिटिवै°, P. करटवै°. 9) B. वैदूर्यस्फाटिक°, P. वैडूर्यस्फुटिक°. 10) P. महारूपमद°. 11) P. ~~similar~~ वसतेषु समग्रेषु धीमतां.

इत्युक्त्वा पिङ्गलं द्रष्टुं यातो दृष्ट्वा प्रणम्य च ।
इदं दमनको वाक्यमेकान्ते ऽभिगतो ऽब्रवीत्[1] ॥ ४८ ॥

कुलक्रमागता भृत्या हितवाक्येषु मूकताम् ।
यत्प्रयान्ति सदोत्सेकस्वामिनः[2] सावलिप्तता ॥ ४९ ॥

संजीवको ऽयं[3] वृषभः स्वामिद्रोहे[4] समुद्यतः ।
यथा चक्राञ्चितग्रीवः[5] संग्रामार्थीव लक्ष्यते ॥ ५० ॥

भयं चाभेषजो दोषो यदेतत्कुकुदुद्भवाः[6] ।
कृमयो नित्य संग्रामव्रणेषु विषमास्तव[7] ॥ ५१ ॥

अविज्ञातस्वभावैर्हि संगतिर्विपदो पदम् ।
हता मत्कुणदोषेण यूका मन्दविसर्पिणी ॥ ५२ ॥

दुग्धाब्धिफेनधवलस्नापशय्यातलाश्रया ।
यूका ददर्श पवनानीतं टिट्टिभमत्कुणम्[8] ॥ ५३ ॥

तं दृष्ट्वा साब्रवीद्द्येयो न ते तीक्ष्णमुखाश्रयः[9] ।
तच्छ्रुत्वा सो ऽवददीनमेकरात्रं[9a] वसाम्यहम् ॥ ५४ ॥

दत्ताश्रयो ऽथ कृपया[10] तया स सहसा नृपम् ।
अदशयेन तत्क्रोधाद्धता[11] यूकैव सेवकैः[12] ॥ ५५ ॥

---

(यत्प्रयांति

5 † 9a) B. ~~[struck]~~ ०नमेकरात्रिं.

~~† तत्क्रोधाद्धता (..)~~

1) B. ०मेकांते ~~विगतोब्रवीत् (..)~~. 2) B. (सदोत्सेकाः स्वामिनः.
3) B. सजीवकोयं. 4) B. स्वामिद्रोहे. 5) B. यथांचक्रांचितग्रीवः.
6) B. यदेतत्ककुदुद्भवः.
7) B. नित्यसंग्रामव्रणेषु (..) विषयास्तव.
8) B. टिट्टिभम°. 9) B. तीक्ष्णमुख°. 10) B. चपया.
11) B. अदृशयेन. 12) B. सेवकैः (..).

यूकाख्यायिका ॥

कुलक्रमागतत्यागो जन्मापूर्वैश्च संगतिः ।

मौर्ख्याच्चण्डरवस्येव विनाशायैव भूपतेः ॥ ५६ ॥

नगरोपान्तनिलयः पुरा चण्डरवाभिधः ।

जम्बुको वृत्तिलोभेन प्रविवेश पुरान्तरम् ॥ ५७ ॥

स रात्रौ श्वगणाक्रान्तः पलायनकृतश्रमः ।

नीलिकारससंपाताद्विचित्रं[1] वर्णमाययौ ॥ ५८ ॥

शृगाला ददृशुर्दृष्ट्वा तं स्वजातिविलक्षणम् ।

H दर्पात्सो ऽन्यान्समभ्येत्य[2]

H ~~[illegible]~~ पुष्टो[3] वि

~~[illegible]~~ व्याघ्रादिष्वधिको ऽभवत् ॥ ५९ ॥

तदुपाहृतमांसाद्यैः ~~पुष्टो~~ विस्मृतदुर्गतिः ।

क्रोष्टुकानां विलोक्यैव कदाचिद्वाचमुद्गताम् ॥ ६० ॥

प्रतिजग्राह नादेन स्वजातिसदृशेन सः ।

तच्छ्रुत्वैव परिज्ञाय तं लज्जाजटिलाननाः ॥ ६१ ॥

वञ्चिताः स्मः खलेनेति[4] जघ्नुस्तं व्याघ्रचित्रकाः ।

चण्डरवाख्यायिका ॥

उपपत्तिसहैर्वाक्यैर्विरक्तहृदयं नृपम् ॥ ६२ ॥

विधायेति हरिं गत्वा चक्रे शङ्काकुलं वृषम् ।

सोऽब्रवीद्धूर्तमध्ये हि दुर्लभं जीवितं सखे ॥ ६३ ॥

---

1) B. नीलीकरस°. 2) B. दर्पान्मोहात्समभ्येत्य. ~~3) B. पुष्टि.~~

3) B. पुष्टि.

4) B. वंचितास्मखलेनेति.

मुग्धं* सिं

मुग्धसिंहाश्रयं[1] जघ्नुरुष्ट्रं काकादयः पुरा ।
विकटाख्ये पुरा सिंहं संग्रामक्षतविग्रहम् ॥६४॥
क्षुधार्ताः सचिवा ऊचुर्द्वीपिगोमायुवायसाः ।
अशक्ता विग्रहे स्वामिन्नवसन्ना वयं वने ॥६५॥
निराहारा न चास्माकं स्वामित्यागः शुभावहः[2] ।
एष सार्थपरिभ्रष्टो य उष्ट्रस्त्वामुपागतः[3] ॥६६॥
महाकायः स पर्याप्तमस्मत्संघस्य भोजनम् ।
तच्छ्रुत्वा भृशमुद्विग्नमाश्रितद्रोहकीर्तनात्[4] ॥६७॥
तमङ्गीकारपदवीं धूर्ता निन्युः शनैर्हरिम्[5] ।
अथोष्ट्रसंनिधौ प्राह[6] व्याजकल्पितसंविदा ॥६८॥
वायसो मच्छरीरेण स्वामिन्वृत्तिः प्रकल्प्यताम्[7] ।
नेत्युक्तवाक्ये शार्दूले[8] तद्वेव प्राह जम्बुकः ॥६९॥
प्रतिषिद्धे पुनस्तस्मिन्द्वीपिन्यापि[9] निराकृते ।
अचिन्तयत्करभकः संरम्भस्पृष्टमानसः[10] ॥७०॥
नैवेह भक्ष्यते कश्चिदौचित्यं दर्शयाम्यहम् ।
स्वामिन्नस्मच्छरीरेण क्रियतां[10] प्राणवर्तनम् ॥७१॥
इत्युक्तमात्रे जघ्नुस्तं द्वीपिजम्बूकवायसाः[12] ।
उष्ट्राख्यायिका ॥

---

1) B. मुग्धसिंहाश्रयं

2) B. °त्यागश्शुभावहः. 3) B. यतुष्ट्रस्त्वा° 4) B. भृशमुद्विग्नमाश्रि°.
5) B. शनैः हरिं. 6) B. °संनिधाप्राह. 7) B. प्रकल्पतां.
8) B. शादूले (~~[illegible]~~). 9) B. °द्वीपिन्यापि. 10) B. सरंभस्पृष्ट°.
10) B. क्रीयतां. 12) B. द्विपिजंबूक°.

* Wie aus dem Folgenden ~~[illegible]~~ [illegible] ~~[illegible]~~
⁊ ~~jaghnu~~ जघ्नुस्तं ~~(sic)~~.

इत्युक्त्वा वृषभस्तस्थौ सिंहापकृतिचिन्तकः[1] ॥ ७२ ॥

तन्मतं तस्य विज्ञाय स्वैरं दमनकोऽब्रवीत् ।

शक्तः सिंहप्रतीकारे[2] न कश्चिदिति चिन्त्यताम् ॥ ७३ ॥

अचिन्तितातिदर्पस्य[3] लज्जाब्धेरपि टिट्टिभात् ।

आसन्नप्रसवा पूर्वं टिट्टिभं दयितावदत् ॥ ७४ ॥

प्रसवस्थानमन्यत्र कल्प्यतां[4] निर्भयं विभो ।

पूर्वास्थितिः समुद्राद्धिर्भीषणाभिर्न[5] रोचते ॥ ७५ ॥

इति तद्वाक्यमाकर्ण्य टिट्टिभः प्राह विस्मितः ।

नैवापकर्तुं शक्तो मे समुन्नद्धो हि सागरः ॥ ७६ ॥

भर्तुरित्युद्धतं[6] श्रुत्वा प्रौढा प्रोवाच टिट्टिभी ।

H न शृ — आसन्नाकुशला नूनं न शृण्वन्ति हितं वचः ॥ ७७ ॥

श्रूयते मित्रवचनानादरात्कच्छपो[7] हतः ।

हंसद्वयसखः पूर्वं कच्छपः स्थानदोषतः[8] ॥ ७८ ॥

दन्तावष्टब्धकाष्ठाग्रो[9] नीतस्ताभ्यां विहायसा ।

ह्रदान्तराभिगमने तं हंसौ कूर्ममूचतुः[10] ॥ ७९ ॥

मौनावलम्बिना भाव्यं त्वयैव बहुशः पथि ।

H दृष्ट्वाविदितां शकटाकृतिम्[11] — ततः पौरजना ~~दृष्ट्वा विदित शकटाकृतिम्~~ ॥ ८० ॥

---

1) B. सिंहायकृति°. 2) B. सिंहः प्रतीकारे. 3) B. अचिंत्वितान्यदर्पस्य.
4) B. प्रसवस्थानमन्मन्ये कल्पतां. 5) B. पूर्वास्थितिसमुद्रोद्रिभीष°.
6) B. भत्तुरित्युद्धतं. 7) B. मित्रवन्वनानादरात्कत्सपो.
8) B. कच्छपस्थान°. 9) B. दत्तावष्टब्यकाष्टाग्रो. 10) B. तं हंसं क्रूर्ममूचतुः.
11) ~~B. विदितं शकट°~~ B. दृष्ट्वाविदितं शकटाकृतिं.

अहो किमिदमित्यासन्महाकोलाहलाकुलाः ।

प्राहसंस्मृत्य तद्वचः[1] किमेतदिति कूर्मोऽपि ~~प्राह सस्मितं तद्वचः~~ ॥ ८१ ॥

दारुस्खलितदन्तत्वात्पतितो निहतो जनैः ।

अनागतभयाभिज्ञो विपत्प्राप्तौ[2] च बुद्धिमान् ॥ ८२ ॥

द्वावेतौ संपदां पात्रं विपदां दैववादिनः ।

अनागतविधिश्चैव प्रत्युत्पन्नमतिस्तथा[3] ॥ ८३ ॥

यद्भविष्यश्च[4] मत्स्याः प्राक् शुश्रुवुर्धीवरीं गिरम् ।

जालं क्षिपामः प्रत्यूषे ह्रदेऽस्मिन्निति तद्भयात् ॥ ८४ ॥

अनागतविधिः प्रायात्सह कान्यौ गन्तुमर्थितौ ।

जा ततः प्रभाते जलौघकृष्टे मत्स्यकदम्बके ॥ ८५ ॥

प्रत्युत्पन्नमतिश्चक्रे[5] कृतकं मृतवद्वपुः ।

निःशङ्कैर्धीवरैर्न्यस्तः स शनैः प्रययौ[6] जलम् ॥ ८६ ॥

यद्भविष्यस्तु लकुटैर्जर्जराङ्गो[7] व्यपद्यत ।

इत्युक्त्वा टिट्टिभी भर्तुर्वाक्यात्तत्रैव शावकान् ॥ ८७ ॥

असूत तांस्तरंगौघैर्जहार च सरित्पतिः ।

गृहिणीभर्त्सितश्चक्रे दुःखितः पक्षिसंगमम् ॥ ८८ ॥

---

1) B. कूर्मोऽपि प्राह सस्मितं तद्वचः. ~~1) B. कूर्मोऽपि~~ ~~1) B. सस्मिततद्वचः~~. 2) B. अनागतभयभिज्ञो विपत्प्राप्तौ. 3) B. प्रत्युतान्नमति°. 4) B. यिद्भविष्यंश्च. ~~5) B. जालौघकृष्टे~~. 5) B. प्रत्युत्पन्नमति°. 6) B. निःशंकैः धीवरैर्न्यस्तस्स शनैः प्रययौ. 7) लकुटैर्जर्जरांगो.

H टिट्टिभस्त

टिट्टिभं तन्महानादं[1] गरुत्मानशृणोत्ततः।
तत्प्रेरितेन हरिणा निरस्तो मकराकरः॥८९॥
लज्जाविकुण्ठवदनष्टिट्टिभ्यै शावकान्ददौ।
कच्छपमत्स्यटिट्टिभाख्यायिका[2]॥
एवं शत्रुविरोधेन[3] महतामपि नोदयः॥९०॥

H किमुतैकान्तभक्ता

किमुतैकान्त-[4]भक्तानामस्माकं मूढचेतसाम्।
कृत्वेति भेदनोपायं ययौ करटकान्तिकम्॥९१॥
हसन्दमनकोऽभ्येत्य हृष्टोऽखिलमुवाच तम्।
पैशुन्योऽसि ततस्तेन पुनः प्रोचे स[5] जम्बुकः॥९२॥
हृदये तैक्ष्ण्यमादाय[6] वदत्यमृतसंनिभम्।
एकद्रव्यार्थिनं हन्यां किं मामङ्ग विगर्हसे॥९३॥

1 घ

पराभिघातादश्नाति[7] विभूतिं विबुधो जनः।
अलक्ष्यप्रतिभोद्भेदो[8] मांसं चतुरको यथा॥९४॥
करभः शङ्कुकर्णाख्यः क्रोष्टा चतुरकश्च सः।
साचिव्यकुशलौ[9] सिंहं वज्रदन्तमुपाश्रितौ॥९५॥
ततो युद्धार्दिततनौ कदाचिद्वारणाद्विषि।
वृत्तिच्छेदाच्चतुरकः शङ्कुकर्णमभाषत॥९६॥

---

1) B. टिट्टिभं तन्महा°. 2) B. कच्छपमत्स्यटिट्टि°. 3) B. शत्रुविनोदेन. 4) B. किमुतैकान्तभक्तानाम°.
5) B. पैशून्योसि ततस्तेन पुनः प्राह च जंबुकः.
6) B. तैक्ष्ण्यमाय°. 7) B. पराभिघातादश्नाति. 8) B. अलक्ष्यप्रातिभा-
द्भेदो. ~~8) B. चतुरकश्च सः.~~ 9) B. साचिव्यं कुशलौ.

तै

H शरीरेण विपु

सखे वक्रकायो वृद्ध्या स्वामिने[1] किं न दीयते।
शरीरेणातिपुष्टेन[2] किमनेन प्रयोजनम् ॥९७॥
एवमस्त्विति तेनोक्तः सिंहमभ्येत्य सोऽवदत्।
बृहत्प्रस्याङ्कमानेन शरीरं संप्रयच्छति[3] ॥९८॥
करभो वपुषो वृद्ध्या प्रसादः क्रियतां[4] विभो।
तद्वाक्यादथ शार्दूलः शङ्कुकर्णं विदार्य तम् ॥९९॥
ययौ स्नानाय धृत्वास्य[5] द्वितीयं परिचारकम्।
तमाह क्रव्यवदनं जम्बुकं चतुरस्ततः ॥१००॥
भक्ष्यावो बृहन्मांसमिति श्रुत्वाब्रवीत्तथा[6]।
तच्छ्रुत्वा चतुरः प्राह तदा मे दृष्टिमर्पय ॥१०१॥
अथ संभक्षिते मांसे संप्राप्ते च मृगाधिपे।
भालुलोके भयाक्रान्तः स क्रोष्टा चतुराननम् ॥१०२॥
भक्षयित्वा किमद्यापि वदनं मम वीक्षसे[7]।
चतुरः प्राह तच्छ्रुत्वा तं जघान मृगेश्वरः ॥१०३॥
अत्रान्तरे महासार्थभ्रष्टं करभकं परम्।
कटाहवादिनं दृष्ट्वा चतुरः सिंहमब्रवीत्[8] ॥१०४॥

---

1) B. सखे वक्त्र कया बुध्या स्वामिने. 2) B. शरीरेणातिपुष्टेन.
3) B. बृहत्प्रस्तांकमानेन शरीरं संप्रयच्छति.
4) B. करभो वपुषा वृद्ध्या प्रसादः क्रीयतां.
~~4) B. I. b. S. 10, Note 7.~~
5) B. ययौ स्नाय धृत्वास्य. ~~Es fehlt hier eine Silbe~~.
6) B. ~~भक्षयावो बृहन्मांसमिति~~ श्रुत्वाब्रवीच्चसा.
7) B. hat वीक्ष्यसे; ~~doch ist das letzte~~ से ist aus ते corrigirt. ~~Ebenso gut wäre वीक्षसे~~. 8) B. ~~कटाहवादिनं दृष्ट्वा चतुरः~~ सिहमब्रवीत् (…).

बृहत्त्वस्थं समादाय[1] सोऽयं करभ आगतः।
धिक्कष्टंमत्कर्मा त्वं वनमन्यादितो व्रज[2] ॥१०५॥
तस्मिनगते यथेष्टं स भक्षयन्वासरान्बहून्[3]।
प्रमोदमाप दुर्लक्ष्याः स्वार्थसिद्धौ सतां धियः[4] ॥१०६॥
चतुराख्यायिका ॥
श्रुत्वेति कर्कशं तस्य वक्रबुद्धिविचेष्टितम्।
पैशुन्यभेदचकितो धर्म्यः करटकोऽब्रवीत्[5] ॥१०७॥
लक्ष्मीं परोपतापेन कोष्ठमन्यधनव्ययैः[6]।
भूतदाहेन चागारं वाञ्छन्ति बत दुर्जनाः[7] ॥१०८॥
सखे विरम पापात्त्वं शृणु[8] मत्तोऽनुशासनम्।
अथवा मूर्खशास्तारो हताः सूचीमुखो यथा[9] ॥१०९॥
हेमन्तकर्षिताः पूर्वं वानराः काष्ठसंचयम्[10]।
आहृत्य कृत्वा खद्योतं मध्ये सर्वेऽभ्यवीजयन्[11] ॥११०॥
दृष्ट्वा सूचीमुखः[12] पक्षी तत्तेषां मूर्खचेष्टितम्।
प्राह व्यर्थश्रमेणालं खद्योतोऽयं न पावकः ॥१११॥

---

1) B. ~~बृहत्त्वस्थं~~ समादाप. 2) B. धिक्कष्टमंधकर्शात्वं वनमन्यादितो व्रजत. Die letzte Silbe त gehört zum folgenden Vers, ~~welcher~~ der in der Handschrift mit स्मिन्गते beginnt. 3) B. स भक्षयन्वासधन्बहून्. 4) B. ~~प्रमोदमाप~~ दुर्ल्लक्ष्यः स्वार्थसिद्धौ सतां धियः. 5) B. पैसून्यभेदचाकितो धर्मं करटकोब्रवीत्. ~~Vgl. Kathās. 10, 4, 202 साधुः करटकोऽब्रवीत्~~. 6) B. लक्ष्मोपरोपतापेन कष्टानन्यधनक्षयैः. 7) B. भूतदाहेन चागारं गक्षंति वत दुर्जनाः. 8) B. श्रुणु. 9) B. सूचिमुखो. 10) B. काष्टसंचयं. 11) B. मध्ये सर्वेष्वपाव्रजन्. 12) B. सोचिमुख:

इति शिक्षां कुर्वाणस्य[1] कश्चिच्छुश्राव नो वचः।
यदा तदा स कर्णान्ते वानरानवदन्मुनः[2] ॥ ११२॥
तत्रैको वचनं श्रुत्वा तस्य निर्बन्धभाषितम्।
गृहीत्वा तं जघानाशु शिलायां भर्त्सयन्कपिः ॥ ११३॥
एवं तवोपदेशोऽयं न वयं कुशलास्पदम्।
येनेयं[3] स्वामिनो लक्ष्मीः पैशुन्यात्संशये[4] धृता ॥ ११४॥

सूचीमुखाख्यायिका ॥

अबुद्धियोगादधमाः सर्वदा विपदास्पदम्।
पिता धूमेन निहतः सुतेनाधर्मबुद्धिना[5] ॥ ११५॥
धर्मबुद्धिरबुद्धिश्च[6] द्वावेव सुहृदौ पुरा।
वणिक्पुत्रावलभेतां[7] सहस्रपरमं धनम् ॥ ११६॥
ततो गृहीत्वा दशमं भूमौ भागं निधाय तम्।
जग्मतुस्तौ ततो गूढमबुद्धिः प्रययौ धनम्[8] ॥ ११७॥
स एव हृत्वा प्रोवाच हृतं मे धर्मबुद्धिना।
साक्षी वक्ष्यति तत्रत्यो वृक्ष इत्यब्रवीत्सभाम्[9] ॥ ११८॥

---

1) B. शिक्षां क्रवाणस्य. 2) B. कर्णान्तवानरान°.
~~3) B. शिलायां भर्त्सयन्कपिः.~~ 3) B. येनयं. ~~5) B. योगादधमा:~~.
4) B. पैशून्या°.
5) °धर्मबुद्धिना. 6) B. वर्मबुद्धि°. 7) B. वणिक्पुत्रावलभतां.
~~9) B. निधायतं~~. 8) B. गूढमबुद्धिः प्रजहौ धनं.
9) B. इत्यब्रवीत्सभां.

तच्छ्रुत्वा विस्मिताः सर्वे धर्माधिकरणे द्विजाः ।[1]

प्रातर्विचार इत्येवं[2] चक्रुः प्रतिभुवा स्थितम् ॥ ११९ ॥

अबुद्धिरथ कृत्वा तद्वृक्षस्य[3] सुषिरान्तरे ।

पितरं गूढवचनैस्तदुक्तैर्व्यंजयत्परम्[4] ॥ १२० ॥

धर्मबुद्धिर्जितस्तत्र विचिन्त्य क्षणमात्मना ।

हतं तन्निधिपालेन तं नुदामीत्यभाषत[5] ॥ १२१ ॥

ततो विधाय बहुलं तुषपर्णतृणानलम्[6] ।

धूमेनापूरयामास विवरं मार्गशाखिनः ॥ १२२ ॥

धूमार्तिक्वथितप्राणो दुर्बुद्धिजनकस्ततः[7] ।

निर्गत्य प्राह पुत्रेण हा हतोऽस्मीति विह्वलः ॥ १२३ ॥

धिगुपायानपायैकपर्यन्तान्मूर्खकल्पितान् ।

पुरा स्वयं समानीतैर्नकुलैर्भक्षिता[8] बकाः ॥ १२४ ॥

बाध्यमाना भुजंगेन बकाः श्रुत्वा कुलीरकात्[9] ।

उपायं नकुलाह्वाने[10] मत्स्यमांसं ददुः पथि ॥ १२५ ॥

आहूता नकुला जघ्नुर्मत्स्यमांसानुसारिणः[11] ।

सर्पं तस्मिन्हते ज्ञात्वा मार्गं जघ्नुर्बकानपि[12] ॥ १२६ ॥

---

1) B. धर्माधिकरणो द्विजाः. 2) B. इत्येवं. 3) B. कृत्वा तं वृक्षस्य. 4) B. °दुक्तो व्यजयत्परं.
5) B. ~~पालेन~~ तं नु दासीत्यभाषत. 6) B. बहुलं नुषपर्णानृणानलं.
7) B. धूमार्तिक्वथितं प्राणो दुर्बुद्धिर्जनकस्ततः.
8) B. समानीतैनकु°. 9) B. कुलीरकान्. 10) B. उपायं नकालाह्वाने.
11) B. जघ्नुमत्स्य°. 12) B. सर्पे तस्मिन्हते ज्ञात्वा मार्गे जघ्नुर्ब°.

एवं कुतनयेनाहं[1] निहतो दुष्टबुद्धिना।
वदन्निति जगामास्तं धूमस्फुटितलोचनः[2] ॥ १२७ ॥
ततो यथार्थं विज्ञाय दुष्टबुद्धिर्हतो द्विजैः।
एवं त्वमपि दौरात्म्यात्पैशुन्यान्नाशमेष्यसि[3] ॥ १२८ ॥

H घि वणिक्पुत्रबकाख्यायिका[4] ॥

अस्माकमपि नाश्वासस्त्वयि मिथ्या सुहृद्द्रुहि[5]।
यस्योपजीव्ये न प्रीतिः कुतस्तस्योपजीवके ॥ १२९ ॥
यत्र लोहसहस्रस्य भक्षयन्त्याखवस्तुलाम्।
श्येनः कुञ्जरं हरेत्तत्र किं चित्रं यदि बालहृत् ॥ १३० ॥

लोहतुलाख्यायिका ॥

अत्रान्तरे पिङ्गलको[6] दृष्ट्वा संकोचकुञ्चिताम्[7]।
ग्रीवां वृषस्य साशङ्कं नखराग्रैरदारयत् ॥ १३१ ॥
H माश्वा हत्वा तमनुतापार्तः स्वैरमाश्वासितो[8] हरिः।
कर्कशा[9] राजचर्येति दमनेन धृतिं ययौ ॥ १३२ ॥

सिंहवृषाख्यायिका ॥

---

1) B. कुतनयेनाहं. 2) B. धूमस्फुटितलोनः (sic).
3) B. °पैशून्या°.
4) B. वणिक्पुत्र°. 5) B. सुहृद्द्रुहि. 6) B. पिगलको.
7) B. संकोचकुंचितं. 8) B. स्वैरमायासितो. 9) B. कर्वशा.

## [॥ द्वितीयं तन्त्रम् ॥]

महिलारोप्यनगरे[1] पुरासीद्वायसाधिपः।
शाल्मलिस्कन्धवसतिर्लघुपातीति विश्रुतः ॥ १ ॥
स कदाचिद्ददर्शाग्रे कपोतेशं सहानुगम्[2]।
चित्रग्रीवाभिधं जाले पतितं पाशजीविनाम् ॥ २ ॥
जालं हरन्तमालोक्य कौतुकात्तं विहायसा।
वायसोऽनुययौ द्रष्टुं तस्य बुद्धिचिकीर्षितम् ॥ ३ ॥
चित्रग्रीवोऽपि संप्राप्य सुहृदं वृद्धमूषकम्[3]।
हिरण्याख्यं महापाशच्छेदने तमनोदयत् ॥ ४ ॥
छिन्नपाशं हिरण्येन ततस्तं वीक्ष्य वायसः।

धे म्र

सख्यं यत्नेन विदधे नीत्वा विस्रम्भमाखुना[4] ॥ ५ ॥
प्ररूढतां ययौ प्रेम प्रीतिभुक्तिपुरःसरम्[5]।

याति काले

~~याते काले~~ रहः काकः कदाचिन्मित्रमब्रवीत्[6] ॥ ६ ॥
वृत्त्ययुक्तमद्य स्थानमिदं[7] मम न रोचते।
सखे जातारतिर्देशे[8] पुष्टिर्हि प्रथमा रतिः ॥ ७ ॥
तदेहि मन्थरो नाम मित्रं मे कच्छपाधिपः।
जाह्नव्यामास्ति गच्छामो विहाराय तदन्तिकम्[9] ॥ ८ ॥

---

1) B. मिहिलारोप्य°. 2) B. सदानुगं. ~~3) B. पाशजीविनां (sic)~~.
3) B. वृद्धमूखकं. 4) B. ~~सख्यं यत्नेन~~ विदधे ते सविस्रंभमाखुना. 5) B. °पुरस्सरं. 6) B. ~~[illegible]~~ काकं कदाचि°.
7) B. वृत्तियुक्तमपि स्था°.
8) B. जातारतिर्देहे. ~~पुष्टिर्हि~~. 9) Hinter diesem Verse ist unzweifelhaft im Texte eine Lücke, vgl. die Note.

H अपाय NB. â

~~अपायात्~~ खिन्नः प्राप्तोऽहमित्युक्तवति वायसे । [1)]

पृष्टो हिरण्यः प्रोवाच निजागमनकारणम् ॥ ९ ॥

H इ गू

परिव्राड्गूढकर्णोऽस्ति [2)] प्रख्यातो नगरान्तिके ।

तदाश्रमेऽहं सततं पूर्णां वृत्तिमकल्पयम् ॥ १० ॥

नागदन्ताग्रसंसक्तभिक्षाभाजनसंस्थिताम् । [3)]

याते काले ततस्तस्य [4)] परिव्राडाययौ परः ॥ ११ ॥

I स

स भुक्त्वा निशि विश्रब्धं [5)] प्रोवाच विविधाः कथाः ।

गूढकर्णस्तु मामेव चिन्तयञ्जर्जरं [6)] मुहुः ॥ १२ ॥

अवादयत्कथाविघ्ने बृहत्स्फिक्कुपितोऽब्रवीत् । [7)]

अहो विद्यावयोवृद्धे [8)] निःसङ्गोऽपि भवान्सखा ॥ १३ ॥

कथास्वनादरो दर्पान्मदान्ध इव लक्ष्यते ।

तच्छ्रुत्वा लज्जितः किंचिद्गूढकर्णोऽभ्यभाषत ॥ १४ ॥

न दर्पादन्यचित्तोऽहं श्रूयतामत्र कारणम् ।

सततं मूषकः पापो भैक्षपात्राद्लङ्घितः [9)] ॥ १५ ॥

समश्नाति भिया तस्य जर्जरं वादयाम्यहम् ।

बृहत्स्फिग्गूढकर्णस्य श्रुत्वेति प्राह सस्मितम् [10)] ॥ १६ ॥

---

1) B. अपापः खिन्नः प्राप्तोहमित्युक्तवति नायसः.
2) B. परिव्राट् गूढ° ~~3) तदाश्रमेहं सततं~~. 3) B. °संस्थिते. 4) B. याते काले स्ततस्तस्य st. ततस्तस्य (das erste स् scheint getilgt zu sein). ~~6) B. भैक्षपात्राद्°~~ 6) B. चिंतयञ्जर्जरं.
7) B. °तोब्रवीत्. 9) B. भैक्ष्यपात्राद्°. 10) B. सस्मितः.

5) B. विश्रब्धं.
8) B. °वृद्धो.

अतीवावहितस्यापि भक्षयत्येष भोजनम्[1] ।
अवश्यं कारणेनात्र भवितव्यं तपोधन ॥१७॥
करोति शाण्डिलीमाता[2] नाकस्मात्तिलविक्रयम् ।
पुरापश्यमहं पान्थः स्थितो ब्राह्मणवेश्मनि ॥१८॥
ब्राह्मणीं कुपितां पत्युः सर्वान्नभयकारणात्[3] ।
लुब्धामवोचत्तां भर्ता भद्रे नाशो[4]ऽतिसंचये ॥१९॥
संचयेनातिलुब्धो हि निहतो जम्बुकः पुरा ।
अरण्ये प्राप गोमायुः परस्परहतान्पुरा ॥२०॥
लुब्धकक्रोडहरिणान्यत्नारूढं[5] च कार्मुकम् ।
अयत्नोपनतं प्राप्य हर्षपूर्णोऽथ जम्बुकः ॥२१॥

तान्संचयं

तत्संचयं विधायैव कार्मुकं भोक्तुमुद्यतः ।
चापचर्वणासक्तस्य तस्य पक्षेषुणा दृढम् ॥२२॥
दारितस्य ययुः प्राणास्तस्मान्नाशोऽतिसंचयः ।
पत्युः श्रुत्वेति वचनं पर्वयोगानुकारिणी ॥२३॥
स्नानाय तं विसृज्याशु पाकसंज्ञाभवत्क्षणात्[6] ।
तत्तिलान्कृसराहेतोः शोषणे स्थापितान्पुरः[7] ॥२४॥

भद्रनाशो.

---

1) B. अहीवावाहितस्यापि भक्षयत्येष भाजनं.
2) B. शांडलीमाता. 3) B. ब्राह्मणी क्रुपिता पत्युः सर्वा~~न्न~~भयकारणात्.
~~B. hat [illegible] सर्वान्न~~.
4) B. लुब्धामवोचङ्गां भर्त्ता ~~भद्र (...) नाशो~~. 5) B. °हरिणान्यत्ररूढं.
~~[illegible]) B. तान्संचयं ... तत्संचयं. 7) B. पर्वयोगानुकारिणी.~~
6) B. पाकसंज्ञाभवतत्क्षणात्. 7) B. तत्तिलान्कृशराहेतो: शिष्येण स्थापितान्पुरः.

H श्रा क्रि

अभ्येत्य ~~का~~क्रियायोग्यांश्चक्रे जिह्वावलेहनैः[1]।
तिलानां विक्रयं कर्तुमुद्यतामपरैस्तिलैः ॥२५॥
दृष्ट्वा परो गृहस्वामी विचिन्त्य क्षणमब्रवीत्।
करोति ब्राह्मणवधूर्नाकस्मात्तिलविक्रयम् ॥२६॥
तस्मादाखुस्तथैवैष न शक्तः कारणं[2] विना।
गर्भतिलाख्यायिका ॥
इत्युक्त्वा मद्बिलद्वारं स विदार्यातिकोविदः ॥२७॥
येनाहमभवं धृष्टस्तत्सुवर्णं[3] जहार मे।
ततो मे शक्तिहीनस्य क्षीणवृत्तेर्गतत्विषः ॥२८॥
त्यक्तस्य भृत्यस्वजनैरिदमासीन्मनोगतम्[4]।
अहो नु धनहीनानां मरणं सुगतिः परा ॥२९॥
गतासुः सेव्यते गृध्रैर्न[5] नु केनापि निर्धनः।
इति चिन्तापरीतोऽहमनेन लघुपातिना ॥३०॥
संगतो जाह्नवीकूले[6] प्राप्तो भद्र त्वदन्तिकम्।
तच्छ्रुत्वाश्वासयामास हिरण्यं कच्छपाधिपः ॥३१॥
उद्योगशीलो विभवं प्राप्स्यसीति पुनः पुनः।
एवं प्रब्रुवतां तेषां लुब्धकस्तत्र[7] आययौ ॥३२॥

---

N.B. 1) B. °लेहमैः. 2) B. तस्मादाखुस्तथैवैष न शक्तं कारणं. ~~3) B. गर्भतिला°~~. 4) B. °रिदमसीन्मनो°. 6) B. जाह्नवीकूले. 7) B. प्रब्रुवतां ~~तेषां लुब्धकस्तत्र आययौ~~ तेषां लुब्धकस्तत्र आययौ.

3) B. °भवं दृष्टा तत्सु°.
5) B. गृध्रैर्न नु केनापि.

चित्राङ्गो नाम[1] सारङ्गः प्रशंसन्निव मित्रताम् ।

1 स्र — तेषां विस्रम्भसौहार्दे[2] वर्धमाने परस्परम् ॥ ३३ ॥

मृगः कदाचित्संकेतवेलायां न व्यदृश्यत ।

ततस्ते शङ्किता मित्रं बद्धं विज्ञाय वायसात् ॥ ३४ ॥

अचोदयन्कुरङ्गस्य बन्धच्छेदाय मूषकम् ।

नीतोऽथ मूषकस्तत्र वायसेन विहायसा ॥ ३५ ॥

दृष्ट्वा कुरङ्गं प्रोवाच देशकालज्ञता क्व ते[3] ।

इति श्रुत्वाब्रवीदेनं प्राप्तोऽहं दैवशासनात् ॥ ३६ ॥

क्रीडार्थं राजपुत्राणां दृष्टबन्धोऽप्यहं पुरा ।

देशकालबलज्ञो हि दृष्टोपायोऽपि पण्डितः ॥ ३७ ॥

सखे पराङ्मुखे दैवे समर्थोऽपि करोति किम् ।

एवं तयोः कथयतोर्मन्थरोऽपि[4] सुहृत्प्रियः ॥ ३८ ॥

आययौ शनकैर्यत्र मृगमूषकवायसाः ।

दृष्ट्वा कच्छपमायान्तं मूषकः कुपितोऽब्रवीत्[5] ॥ ३९ ॥

धिङ्मामदेशकालज्ञं यस्मात्प्राप्तोऽसि ~~[illegible]~~ ।

ततः कुरङ्गपाशाग्रे कृत्ते सत्वरमाखुना ॥ ४० ॥

लुब्धकः सहसा प्राप्य बबन्धाभ्येत्य[6] कच्छपम् ।

त्वा चा — ते च जग्मुर्भयात्तस्य गत्वा चाचिन्तयन्नराम्[7] ॥ ४१ ॥

---

1) B. ~~चित्रांगो नाम~~ सारंगे प्रशंसन्निव. ~~मित्रतां: 2) B. अचोदयन्कुरंगस्य.~~

2) B. विश्रंभ°.

3) B. देशकालाज्ञया क्व ते. Die Silbe या ist mit Bleistift hinzugefügt.

4) B. कथयतोर्मकरोपि. 5) B. कुपितोब्रवीत्. 6) B. बबंधाभ्यस.

7) B. °चिन्तयन्नराः.

तत: संमन्त्र्य[1] चक्रुस्ते व्याजेन पतितं मृगम्।

च[2] नेत्रे विपाटयन्तं ~~वै~~ तस्यैवोपरि वायसम्॥ ४२॥

तद्दृष्ट्वा[3] ~~तं दृष्ट्वा~~ लुब्धके मुग्धे त्यक्त्वा कच्छपमञ्जसा।

अभिद्रुते[4] कुरङ्गाय कूर्ममाखुरमोचयत्[5]॥ ४३॥

सारङ्गेऽपि सवायसे[6]। स तस्मिन्मूषके याते ~~सारङ्गोऽपि सवायस:।~~

जगाम तूर्णमित्येवं बुद्धि:[7] सर्वार्थसाधिनी॥ ४४॥

मूषककाककुरङ्गकच्छपाख्यायिका[8]॥

[॥ तृतीयं तन्त्रम्॥]

न्यग्रोधशाखिनिलयो वायसाधिपति: पुरा।

बभूव मेघवर्णाख्यस्तमालश्यामलच्छवि:[9]॥ १॥

तस्योलूकपतिर्वैरी रिपुमर्द: कुलक्षयम्।

चकार निशि सर्वो हि देशकालाश्रयाद्बली॥ २॥

स सैन्यक्षयशोकार्त: पश्च पप्रच्छ वायसान्।

प्रधानामात्यसंस्थासु नियुक्तान्युक्तिकोविदान्॥ ३॥

देशत्यागमुवाचैक: कालहारं तथापर:।

बलिना संधिमन्योऽथ तूर्णमन्य: पराक्रमम्॥ ४॥

---

1) B. तत: समंत्र्य. ~~4) B. अभिद्रुते. 5) B. कूर्ममाखु°~~

~~4) B. बुधि:. 5) B. °काककूर्मककुपाख्यायिका.~~

~~6) B. वर्णमेघाख्य°. Juncker V 86, wo der Name मेघवर्ण lautet~~

2) B. तं statt च. 3) B. तं दृष्ट्वा. 4) B. अभिद्रुते.

5) B. कूर्ममाखु°. ~~6) B. सारं°~~ 6) B. सारंगोपि सवायस:.

7) B. बुधि:. 8) B. मूषककाककूर्मककपाख्यायिका.

9) B. बभूव वर्णमेघाख्य°.

पञ्चाङ्गपञ्चमं[1] मन्त्रमपरः शत्रुनाशनम् ।

दुर्जया हि सदा घूकाः शत्रवो[2] वाक्कृतेन नः ॥ ५ ॥

श्रुत्वेति वायसपतिर्मन्त्रिणं[3] चिरजीविनम् ।

पप्रच्छ कारणं पृष्टः सोऽप्याह श्रूयतामिति ॥ ६ ॥

मित्राणि शत्रुतां यान्ति शत्रवो यान्ति मित्रताम् ।

वाक्कृतेनैव[4] वाग्दोषाच्छ्रूयते गर्दभो हतः ॥ ७ ॥

द्वीपिचर्मावनद्धाङ्गो रजकेन पुरा खरः[5] ।

पोषाय परसस्येषु ग्रीष्मे त्यक्तः[6] सुदुर्लभः ॥ ८ ॥

सस्यगोप्ताथ तं दृष्ट्वा चकितो द्वीपिरूपिणम् ।

दुद्राव न्यस्तकोदण्डः[7] कम्बलच्छन्नविग्रहः ॥ ९ ॥

सस्यपुष्टशरीरोऽथ तं मत्वा गर्दभीं खरः ।

उद्दण्डमेहनोऽधावदत्युत्तालखुरद्रुयः[8] ॥ १० ॥

मां द्वीपिनं ज्ञास्यसीति तं मनोहरया गिरा ।

घट्टयन्निव[9] संमत्तोऽवदत्तामोच्चितं खरः ॥ ११ ॥

गर्दभं च गिरा ज्ञात्वा जघान स धनुर्धरः ।

वाग्दोषेणेति निहतो गर्दभो बुद्धिलाघवात् ॥ १२ ॥

---

1) B. पंचागं पचमो मंत्रमपरः. 2) B. सदाघूकाः शत्रवो.
3) B. °पतिर्मंत्रिणं. 4) B. वाक्कृतेनैव. 5) B. पुरस्वरः.
6) B. ग्रीष्मे त्यक्तुः सुदु°. 7) B. दुद्राव ग्रस्तकोदंडः.
8) B. ° धावदत्यत्तालखुरद्रुयः. In der Silbe त्य scheint der erste Buchstabe getilgt zu sein. – ~~9) B. घटयन्निव.~~
9) B. घटयन्निव.

रासभाख्यायिका ॥

उलूकं पक्षिणां राज्ये[1] विहंगान्कर्तुमुद्यतान् ।

दृष्ट्वा वंशकरः काकः पुरा प्रोवाच दुःखितः ॥ १३ ॥

अमङ्गलो दिवान्धश्च यत्रोलूकः[2] क्षितीश्वरः ।

का तत्र कुशले वार्त्ता स्वस्ति गच्छाम्यहं दिशः ॥ १४ ॥

प्रसिद्धो हि महीनाथः कार्यः सर्वसुखावहः ।

प्रसिद्धा शशिनो नाम शशकाः सुखभागिनः[3] ॥ १५ ॥

अनावृष्टिहते काले पुरा द्वादशवार्षिके ।

विज्ञप्तः चतुष्कैर्नागैश्चतुर्दन्ताधिपो द्विपः ॥ १६ ॥

विनष्टा एव कालेऽस्मिन्पयसो[4] विरहाद्वयम् ।

इत्युक्त्वा दृष्टुमगमन्नुदकं निखिलां महीम् ॥ १७ ॥

ततश्चन्द्रसरो[5] ज्ञात्वा जलपूर्णं तथा द्विपः ।

संहृष्टोऽवततारासु मत्तालिवलयाकुलः[6] ॥ १८ ॥

तत्रोपकण्ठे शशकान्राजेन्द्रचरणैर्हतान्[7] ~~॥ ॥~~ ।

दृष्ट्वा शशपतिर्दूतं विजयं प्राहिणोद्द्विजे[8] ॥ १९ ॥

स कपोलतलालीनमत्तालिवलयं[9] द्विपम् ~~॥ ॥~~ ।

---

1) B. पक्षिणां राज्ये. 2) B. यत्रालूकः. 3) B. प्रसिध्याशंसिनो नाम शशकः सुखभागिनः. 4) B. °स्मिन्पयसोर्दूरहाद्वयं. 5) B. ततःश्चंद्रसरो. ~~6) B. जलपूर्णं तथा द्विपः.~~ 6) B. संहृष्टोवाततारासु मृगालवलयाकुलं. 7) B. hat scheinbar शशकान्राजेंद्र°. 8) B. शशपतिद्यूतं विनयं प्राहिणोद्द्विजे. 9) ~~B. स कपोलतलालीन°~~. B. hat scheinbar स कपोलनलालीन°.

विसृष्टः शशिनास्मीति जगादाभ्येत्य निर्भयः ॥२०॥

यल्लाञ्छितः शशाङ्कोऽहं पाल्यास्ते शशका मम ।

तेषां क्षयमिमं कृत्वा मत्कोपान्न भविष्यसि ॥२१॥

इत्युक्तिचकितस्याथ द्विपस्यादर्शयज्जले ।

प्रतिमाचन्द्रममलं गजस्तं प्रणनाम च ॥२२॥

स च चन्द्रसरो दृष्ट्वा करस्पर्शचलज्जलम् ।

शशवाक्याद्ययौ नागो ननन्दुः शशकास्ततः ॥२३॥

नागशशकाख्यायिका ॥

स्वामिनो व्यपदेशेन सुखमित्यश्नुते जनः ।

अयं तु क्षुद्रनृपतिर्जितान्तविनाशनः ॥२४॥

कपिञ्जलशशौ पूर्वं वेश्मदानविवादिनौ ।

मार्जारं दधिकर्णाख्यं न्यायं पप्रच्छतुः पुरा ॥२५॥

मिथ्याविनीतः सद्धर्मादेष्टा शान्तिपरायणः ।

जपस्थ इव मुग्धाक्षः सोऽब्रवीत्पेशलस्वनः ॥२६॥

अहिंसा परमो धर्मो मोक्षः परहितं नृणाम् ।

प्राणिद्रोहप्रसक्तानामन्धे तमसि संस्थितिः ॥२७॥

vgl. Uttar.

Hab. III, sl. 38, Panc. Jl. 104 f.

क्ष

---

~~1) B. यल्लांछितः शशांकोहं.~~ 1) B. क्षयमिमां कृत्वा.
2) B. hat scheinbar सुखमित्यश्नुते. 3) B. वेश्मदानविनोदिनौ.
~~5) B. जपस्थ इव~~. 4) B. °ब्रवीत्येशलस्वनः.

श्रुत्वेत्याश्वासपदवीं यातौ तावनुगौ ततः[1]।

अभवत्क्षुद्रनृपो[2] दुष्टः सर्वविनाशकृत् ॥२८॥

र्जा मार्जाराख्यायिका[3] ॥

तस्मादुलूको नार्होऽयमिति तद्वचसा पुरा।

नष्टराज्योऽभवद्वैरी[4] काकानामित्यमङ्गलः ॥२९॥

छलेन पातय रिपून्सर्वोपायपरीक्षया[5]।

छलेन भ्रंशितच्छागो धूर्तैः शत्रुभिरग्रजः[6] ॥३०॥

स्कन्धे छागलमादाय[7] व्रजन्तं ब्राह्मणं पथि[8]।

वञ्चनायाब्रुवन्धूर्ताः संघशः कृतसंविदः[9] ॥३१॥

अहो श्वा मृगहा नूनमयं कस्य द्विजर्षभ।

स्कन्धे तवोढो[10] मार्गेषु नृपोपायनमेष वा ॥३२॥

एकस्मिन्नित्यपक्रान्ते दूरमन्यावथोचतुः।

अहो विचित्रं पश्यावः स्कन्धेन यदयं द्विजः ॥३३॥

श्वानं वहति किं नु स्यादयं व्याधो द्विजाकृतिः[11]।

तयोः श्रुत्वेति[12] विप्रस्तं निधाय भुवि शङ्कितः ॥३४॥

---

1) B. °नुगौ तनः. 2) B. अभत्तयन्क्षुद्रनृपो. 3) B. मार्जरा°.
4) B. °भवद्दूरी. 5) B. कालेन पातय रिपून्सर्वोपायपरीक्षये.
त 6) B. छलेन भ्रंशिकाग द्धुत्तैं शत्रुभि°.
7) B. छगल्नमा°. 8) B. ब्राह्मणा पथि.
9) B. वंचनाय ब्रवन्धुत्तां: संघशः त्ततसंविदः (sic). 10) B. स्कंधेनवोढो.
11) B. द्विजाकृति. 12) B. सृत्वेति.

पस्पर्श पाणिना पुच्छविषाणावृषणादिषु ।
उन्मत्ता विलपन्त्येते[1] छागो नायमिति स्वयम् ॥ ३५ ॥
पुनः स्कन्धे समादाय तं ययौ चतुरं[2] द्विजः ।
ततः परे समभ्येत्य कच्छानियमिताम्बराः[3] ॥ ३६ ॥
ऊचुर्द्विजो ऽयमस्पृश्यः[4] श्वपाक इव पापभाक् ।
अहो महाजने नायं लज्जते कुलपांसनः ॥ ३७ ॥
श्वानं वहति यः स्कन्धे पथि ~~याति च~~ संस्पृशेत् ।
इत्याकर्ण्य भृशोद्विग्नस्त्यक्त्वाजं दुःखितो द्विजः ॥ ३८ ॥
बहूनामेकवाक्येन संजातप्रत्ययो ऽभवत् ।
मायावी राक्षसो नूनमजो ऽयं[6] स्यान्न संशयः ॥ ३९ ॥
इति संचिन्त्य तत्याज तं द्विजो धूर्तवञ्चितः ।
छागमादाय[7] भुक्त्वा ते धूर्ता मुमुदिरे परम् ॥ ४० ॥
इति व्याजेन शत्रूणां कुर्यात्सपदि[8] वञ्चनाम् ।
छागाख्यायिका ॥
उक्तेति वायसामात्यश्चिरंजीवी[9] निजं प्रभुम् ॥ ४१ ॥
विसृज्य कृतकच्छिन्नपक्षस्तस्थौ[10] मृतोपमः ।

H यातश्च[5]

---

1) B. विलयंत्येते. 2) B. चतुरो द्विजः. 3) B. कच्छानियमितांवराः. 4) B. कुचुर्द्विजो:. 5) B. याति च. 6) B. नूनमजोयं. 7) B. छगमादाय. 8) B. °संपदि. 9) B. °श्चिरंजीवी. 10) B. कृतकछन्नपक्षस्तस्थौ मतोपमः.

अभ्येत्य वायसावासं चतुरः सानुगो निशि ॥ ४२॥

उलूकः पतितं काकं ददर्श चिरञ्जीविनम्।

केचिदाहुरवध्योऽयं वध्योऽयमिति चापरे ॥ ४३॥

मन्त्रिणो घूकराजस्य मुख्यामात्योऽब्रवीत्ततः।[1]

कृपणः शरणं यातो रक्ष्योऽयं विपदि स्थितः ॥ ४४॥

ददौ सार्थपतिः पूर्वं चौरायापि स्वयं धनम्।

वृद्धं पुरा सार्थवाहं भार्या हरिणलोचना ॥ ४५॥

बाला पिशाचसदृशं न सेहे[2] द्रष्टुमुल्बणम्।

कदाचिदथ शर्वर्यां चौरं वीक्ष्य[3] स्वमन्दिरे ॥ ४६॥

चकिता सहसा वृद्धमालिलिङ्ग घनस्तनी।

सदापराङ्मुखीं दृष्ट्वा स्वयं कण्ठावलम्बिनीम् ॥ ४७॥

कान्तां वृद्धोऽवदच्चौरमकाण्डामृतनन्दितः।[4]

नव मा

नेच्छतेऽपाङ्गलोलाक्षी[5] सैवमालिङ्गति स्वयम् ॥ ४८॥

हर चौर धनं सर्वं प्रियकृद्दयितोऽसि मे।

दयिताख्यायिका ॥

इति चोरोऽपि वणिजा कारणेन सुहृत्कृतः ॥ ४९॥

---

1) B. °त्योब्रवीत्ततः. 2) B. द्रष्टुमुल्वणं. 3) B. चौरवीक्ष्य.
4) B. कांतवृद्धो°. 5) B. नेच्छतेपागलोलाची.

अयं वाकस्तु शत्रूणां सर्वं वक्ष्यति चेष्टितम् ।

पुरा राक्षसचौराभ्यां श्रूयते रक्षितो द्विजः ॥ ५० ॥

तुल्यकालं[1] द्विजगृहं जग्मतुश्चौरराक्षसौ ।

शरीरधनहिंसार्थमहंपूर्विकया तयोः ॥ ५१ ॥

विवादोऽभून्निशि महानूचतुस्तौ द्विजं ततः ।

अयं ते धनहृत्प्राप्तस्तव चायं शरीरहृत्[2] ॥ ५२ ॥

विप्रस्तयोरिदं श्रुत्वा बालमत्तौ जघान तौ ।

चौरराक्षसाख्यायिका ॥

अरिमर्दे[3] तदाकर्ण्य काकानुक्रोशशालिनि[4] ॥ ५३ ॥

तद्वचोविरतौ प्राहुरपरे घूकमन्त्रिणः ।

अहो कुमन्त्रिणानेन[5] संशये स्वामिनो धृता[6] ॥ ५४ ॥

लक्ष्मीः शत्रुप्रयुक्तेऽस्मिन्काके कारुण्यचेतसा ।

वञ्चन्ते[7] धूर्तवचनैः प्रभवः सरलाशयाः ॥ ५५ ॥

जायां सजारां शिरसा रथकारः पुरावहत् ।

कृत्वा प्रयोजनमिषं निर्गत्य शिबिराल्लघु ॥ ५६ ॥

---

1) B. तुल्यं कालं. 2) B. शरीरकृत्. ~~3) B. बालमत्तौ~~
3) B. अरिमर्द्दे (sic). 4) B. °मालिनी. 5) B. कुमंत्रिणानेन.
7) B. वंच्यते धूर्त्तवचनैः.

6) B. धृताः.

भार्यां जारवतीं द्रष्टुं विवेश रथकृत्पुनः।
गूढे शयनपर्यङ्कतले तस्मिन्नधःस्थिते[1] ॥५७॥
प्रियोपपतिना चक्रे सुरतं तेन[2] तद्वधूः।
सा ज्ञात्वा पादसंस्पर्शान्नित्तं पतिमलक्षितम् ॥५८॥
उवाच धर्मपत्न्या मे तत्परो[3] नास्ति वल्लभः।
तज्ज्ञात्वा मूढहृदयो रथकारो मुदान्वितः ॥५९॥
उवाह शिरसा भार्यां सजारां **हासयन्पथि**[4]।

रथकाराख्यायिका ॥

इत्थं विमूढहृदया वञ्च्यन्ते प्रियवादिभिः ॥६०॥
चिरजीवी च काकोऽयं संधेयो[5] नेति मे मतिः।
**ततो मुखोद्गमद्रक्तः**[6] कृतकस्रस्तपक्षतिः ॥६१॥
खञ्जन्नुलूकनृपतिं चिरजीवी व्यजिज्ञपत्।
देव त्यजाम्यहं प्राणान्कृतघ्नैर्वायसैर्हतः ॥६२॥
त्वत्कृते तद्वधायाहं[7] जातिं वाञ्छामि कौशिकीम्।
काकस्येति वचः श्रुत्वा घूकामात्योऽवदद्बुधः[8] ॥६३॥
उलूकजातिर्न प्राप्या त्वया वक्रेण[9] वायस।
त्यक्तोद्वाहा रविमुखैः[10] स्वयोनिं मूषिका ययौ ॥६४॥

---

1) B. तस्मिंन्नधःस्थितौ ~~(...)~~. 2) B. सुरततेन. 3) B. तत्पुरो.
4) B. ~~भार्यां~~ सजाराहासयन्पथि. 5) B. संधेयो नति मे मतिः.
6) B. ततो मुखाद्गमद्रक्तः. 7) B. त्वत्कृते बद्धधा°.
8) B. घूकामात्यो°. 9) B. वक्रेण. 10) B. त्यक्तोद्वाहारविमुखैः.

गङ्गातीरे मुनिः कश्चिन्मूषिकां श्येनपातिताम् ।
कृपालुः कन्यकां[1] चक्रे तपसा ववृधे च सा ॥६५॥

H स्था

तां यौवनस्थामालोक्य मुनिर्दातुं समुद्यतः ।
आजुहाव सहस्रांशुं स चाभ्येत्याब्रवीन्मुनिम्[2] ॥६६॥

मत्प्रभावाधिका मेघा ये कृत्स्नं छादयन्ति माम् ।
आहूतास्ते ऽप्यथ[3] प्राहुरस्मत्तो ऽभ्यधिको ऽनिलः ॥६७॥

सो ऽप्यब्रवीद्यथाहूतो गिरिर्मत्तो बलाधिकः ।
आहूताः पर्वताः प्राहुर्मूषकैर्निर्जिता वयम् ॥६८॥

गृहाण कन्यामित्याखुर्निर्दिष्टो मुनिनावदत् ।
कन्या बिले मम कथं प्रविशेदिति सादरः ॥६९॥

ततः सा मूषिकैवाभूद्बिलयोग्या[4] मुनेर्गिरा ।
इत्यात्मजातिमुत्सृज्य न यान्त्यभ्यधिकां[5] खलाः ॥७०॥

मूषिकाख्यायिका ॥

उक्तेति विरते तस्मिन्नमात्ये नीतिशंसिनि ।
उलूकः काकमादाय स्वमेव शिबिरं ययौ ॥७१॥

---

1) B. कृपालुःन्यकां (sic) 2) B. सहस्रांशुंसा चाभ्येत्याब्रवीन्मुनिः.
3) B. आहूतास्तेप्यथ. ~~प्राहुरस्मत्तोभ्यधिकोनिलः~~
4) B. °भूद्बिलयोग्या. 5) B. ~~न्यांत्यभ्यधिकं खलाः~~. °भ्यधिकं खलाः.

तं शत्रुसंश्रयासन्ननाशं वीक्ष्य स्वयं प्रभुम् ।
उलूकमन्त्री प्रययावागामिभयशङ्कया ॥ ७२ ॥
चिरजीवी[1] समाश्वास्य छिद्रं दुर्गं समीक्ष्य च ।
आहूय वायसपतिं ददाहोलूकमण्डलम्[2] ॥ ७३ ॥
दग्ध्वोलूकगुहां पूर्णामभिषिच्य[3] निजं प्रभुम् ।
चिरजीवी निजजनैः पूज्यमानो मुदं ययौ ॥ ७४ ॥
ततः पप्रच्छ सद्भृत्यं राज्यमासाद्य वायसः ।
कथं शत्रुगृहे कालस्त्वया नीतोऽतिदुःसहः[4] ॥ ७५ ॥
सोऽब्रवीद्विपुलं दुःखमवाप्तं कालकाङ्क्षिणा ।
शत्रुः स्कन्धेन वोढव्यः प्राज्ञैः सम्पदि सर्पवत् ॥ ७६ ॥
सर्पस्तडागमासाद्य वृत्तिच्छेदात्कृशः[5] पुरा ।
धूर्तः प्रोवाच मण्डूकान्पुरा दष्टो मया द्विजः ॥ ७७ ॥
तच्छापादेव जातोऽस्मि[6] सर्वमण्डूकवाहनम् ।
मण्डूकराजस्तच्छ्रुत्वा चक्रे तं वाहनं मुदा ॥ ७८ ॥
स्कन्धे गृहीत्वा मण्डूकं स नानागतिकोविदः ।
ययाचे भोजनं मन्दं वपुः कृत्वा मृदुस्वरः ॥ ७९ ॥

---

1) B. चिरंजीवी. 2) B. वायसपतिर्ददाहो°. 3) B. दग्ध्वोलूकगुहापूर्णां°.
4) B. °दुस्सहः. ~~5) B. सम्पदि.~~ 5) B. वृत्तिच्छेदत्कृशः.
6) B. यातोस्मि.

शनैः शनैस्त्वदादेशात्सर्वमशङ्कसंचयम् ।
चक्रे शत्रुगृहेष्वेवं तिष्ठेत्कार्यवशागतः[1] ॥ ८० ॥

मण्डूकाख्यायिका ॥

वृद्धवाक्यं हितं राज्ञा श्रोतव्यं तत्त्वया सदा ।
श्रूयते हंसनिचयो वृद्धवाक्येन रक्षितः ॥ ८१ ॥
हंसानामधिपः पूर्वं चीरोदो नाम शाल्मलौ[2] ।
उवास तमुवाचाथ सहृद्यो[3] वृद्धसारसः ॥ ८२ ॥
आधिरूढामिदं बीजं विनाशाय कुलस्य नः ।
निरस्यतां तदित्यस्य[4] कश्चिच्छुश्राव नो वचः ॥ ८३ ॥
ततः कालेन बद्धेषु हंसेषु खगजीविभिः ।
वृद्धहंसोऽब्रवीदत्र तिष्ठेत[5] कृतकंमृताः ॥ ८४ ॥
तथेति निश्चितांस्तांस्तु जालादुद्धृत्य[6] धीवराः ।
राशीभूतान्खगांश्चक्रुरुड्डीय प्रययुश्च ते ॥ ८५ ॥

हंसाख्यायिका ॥

चिरजीविवचः[7] श्रुत्वा मेघवर्णः श्रिया युतः ।
ननन्द शत्रुनाशेन राज्येन सहबान्धवः ॥ ८६ ॥

काकोलूकाख्यायिका ॥

---

1) B. तिष्ठेत्कार्य॰. 2) B. शाश्मनौ. 3) B. तमुवाचार्थ[illegible] स भृत्यो. 4) B. तदित्याह. 5) B. ॰ब्रवीदत्र तिष्ठेति कृतकंमृताः. 6) निश्चितैस्तैस्तु जालादुद्धृत्य. 7) B. hat जीजीवीवचः (sic) und über der Zeile चिर.

[॥ चतुर्थं तन्त्रम् ॥]

वानरः शिशुमारश्च पुरा मित्रे बभूवतुः।

H रौ वित्र उदुम्बरफलाहारविस्रम्भप्रीतिसेवनात्[1] ॥ १ ॥

मित्रैकसेविनो जाया शिशुमारस्य दुःखिता।

बभूवास्वस्थहृदया[2] क्षयरोगनिपीडिता ॥ २ ॥

तां वीक्ष्य शिशुमारोऽपि दुःखितस्तत्सखीगिरा।

वानरस्यैव हृदयं विवेद व्याधिभेषजम् ॥ ३ ॥

स गत्वा वानरं प्राह करे गाढं निपीड्य तम्।

मित्र जाया ममास्वस्था हृदयं देहि भेषजम् ॥ ४ ॥

श्रुत्वेत्यशनिसंकाशं[3] विषमो वानरोऽब्रवीत्।

किं पूर्वमेव नोक्तं मे पश्चाद्दोषः पलाण्डुवत् ॥ ५ ॥

पलाण्डुमोषमादाय[4] प्राहुर्नगररक्षिणः।

रूपकाणां शतं देहि[5] लगुडानि सहस्व वा ॥ ६ ॥

|टु पलाण्डोर्भक्षयेदं वा शतं कटुरसोत्कटम्[6]।

स तच्छ्रुत्वाददे भोक्तुं पलाण्डुं तेन[7] तापितः ॥ ७ ॥

सेहे प्रहारांस्तैर्व्यस्तो रूपकाणां[8] शतं ददौ।

चोराख्यायिका ॥

उदुम्बरं[9] समारुह्य दास्यामि हृदयं तव ॥ ८ ॥

---

1) B. उदंबरफलाहारैर्विश्रंभ°. 2) B. बभूवास्वस्तहृदया.
3) B. °शनिशंकाशं od. ° संकाशं; सं scheint aus शं corrigirt zu sein.
4) B. पलांडुदोषमादाय. 5) B. रूपकानां ~~(sic)~~ शते देहि.
6) B. शतं कटुरसोत्कटं. 7) B. पलांडु तेन.
8) B. प्रहारास्तैर्व्यस्तो रूपकानां (sic). 9) B. उदुबरं.

इत्युक्त्वा वृक्षमारुह्य[1] भयं त्यक्त्वा तमब्रवीत् ।
व्रज दुष्टाशय सखे विज्ञातोऽसि चिरान्मया ॥ ९ ॥
नास्मि[2] गर्दभवन्मूर्खो वञ्चनीयो भवद्विधैः ।
व्याधिक्षामं पुरा सिंहं जम्बुकः सचिवोऽब्रवीत् ॥ १० ॥
केन नश्यति ते व्याधिरवसन्ना वयं प्रभो ।
सिंहोऽब्रवीद्यदि भवेत्कुतश्चित्सरसोद्धृतम्[3] ॥ ११ ॥
गार्दभं कर्णहृदयं तेन शाम्यति मे गदः ।
तच्छ्रुत्वा जम्बुको गत्वावदद्रजकगर्दभम् ॥ १२ ॥
भारपीडाकृशोऽत्र त्वं वनमेवैहि वृत्तिमत् ।
तिष्ठन्ति[4] तत्र गर्दभ्यस्तच्छ्रुत्वा स समाययौ ॥ १३ ॥
तस्य पृष्ठे[5] ययावुग्रः स सिंहः स्वनदुःसहः[6] ।
मुक्तः कृच्छ्रेण दुद्राव ततः सपदि रासभः ॥ १४ ॥
क्रोष्टा निनिन्द शार्दूलं निर्वेदमृदुवादितम्[7] ।
गर्हयित्वा[8] मृगपतिं प्रोवाचाभ्येत्य गर्दभम् ॥ १५ ॥
अपक्रान्तोऽसि किं मूर्ख गर्दभ्याहारितस्त्वया ।
प्रथमं सर्वसिद्धीनां ~~सोढाविघ्नं~~ सुखी भवेत् ॥ १६ ॥

H सोढा विघ्नं

---

2) B. नास्ति.

1) B. वृक्षयारुह्य. 3) B. °यदि भवेत्कुतश्चि°. 4) B. तिष्ठंति.
5) B. पृष्टे. 6) B. स सिंहस्वनदुस्सहः.
7) B. शार्दूलं ननिंदमृदुवादिनं. 8) B. गृर्हयित्वा मृग°. ~~9) B. सोढाविघ्नं.~~

इति तस्य गिरायातं खरं हत्वा मृगेश्वरे ।
स्नानाय याते तत्कर्णहृदयं जम्बुको ऽहरत् ॥ १७॥
क्व यातं तत्समभ्येत्य ब्रुवाणो वारणद्विषि ।
H त्या — क्रोष्टावदन्न जानीषे प्रकृत्या[1] सरलाशय ॥१८॥
अकर्णहृदयो मूर्खो यदि न स्यादयं खरः ।
गतोऽपि दृष्टमात्रेऽसौ[2] किं पुनर्व्यसनं विशेत् ॥ १९॥
खराख्यायिका ॥

गच्छाधुना न ते मित्रमहं कुटिलचेष्टित[3] ।
शिशुमारो निशम्येति वानरं प्राह दुःखितः ॥२०॥
H वी — न ददाति प्रतिश्रुत्य यः सत्यपदविच्युतः[4] ।
H निरालम्बी तमो[5] — ~~निरालम्बतमो~~ याति स शिलाशतताडितः ॥२१॥
वानरस्तद्वचः श्रुत्वा प्रोवाच मतिरस्ति ते ।
न्ना — न पुण्यं सत्यमात्रेण सत्यांशोऽस्ति केवलात् ॥२२॥
क — पुरा खर्परघाताङ्कललाटः[6] पुरुषो नृपम् ।
अवाप्य विपुलां वृत्तिं लेभे विक्रमलाञ्छितः ॥२३॥

---

1) B. प्रकृतः सरलाशया. 2) B. दृष्टमात्रोसौ. 3) B. कुटिलचेष्टितः. 4) B. सत्यपदविच्युतः. 5) B. निरालंबीतमो. 6) B. खर्परघातोंकललाटः.

कालेन पृष्टो राज्ञा च स प्रहारस्य कारणम् ।

१क प्राप्तं घटप्रपातेन खर्पराघातमभ्यधात्[1] ॥२४॥

तज्ज्ञात्वा[2] राजपुरुषैर्निरस्तः प्रच्युतः क्षणात् ।

१ख इति केवलसत्येन न भवन्ति हितश्रियः ॥२५॥

सत्याख्यायिका ॥

इत्याकर्ण्य हरेर्वाक्यमनुतापहताशयः ।

शिशुमारो ययौ मन्दं ननन्द च चिरं कपिः ॥२६॥

वानरशिशुमाराख्यायिका ॥

[॥ पञ्चमं तन्त्रम् ॥]

गौडेषु देवशर्माख्यो[3] बभूव ब्राह्मणः पुरा ।

स हृष्टो गर्भिणीं जायां निजामवददुत्सुकः[4] ॥१॥

भविष्यत्येव पुत्रस्ते मम वंशविवर्धनः ।

इति श्रुत्वाब्रवीज्जाया[5] भाविषु प्रत्ययः कथम् ॥२॥

आशां विधाय भावेषु यो हि भाविषु हृष्यति[6] ।

स लज्जते सक्तुघटं भङ्क्त्वेव स्वयमग्रजः[7] ॥३॥

---

1) B. पूर्यद्दूरप्रयातेन खर्पराघातमभ्यध्यात्. 2) B. तज्ज्ञात्वा.
3) B. देववर्माख्यो. 4) B. °वददुत्सुकः. 5) B. श्रुत्वाब्रवी°.
6) B. यो हि भावेषु हृष्यति. 7) B. भङ्क्त्वैव स्वयमग्रतः.

भिक्षार्जितं सक्तुघटं निधाय ब्राह्मणः पुरा ।
अचिन्तयदनावृष्ट्या तस्य मूल्यं चतुर्गुणम् ॥ ४ ॥
तन्मूल्ये छागिकाः क्रीत्वा[1] ताभिः प्राप्स्यामि गोधनम् ।
कृषिं तेन समाधाय परिणेष्यामि कन्यकाम् ॥ ५ ॥
महाधनस्य पुत्रो मे सोमशर्मा भविष्यति ।
रोदिष्यति सुते तस्मिन्स्तनपानाय[2] तत्क्षणम् ॥ ६ ॥
ताडयिष्यामि लकुटैर्गृहिणीमतिकोपनः[3] ।
इति भ्रमेण लगुडक्षेपैर्घटमताडयत्[4] ॥ ७ ॥
भग्नं सक्तुघटं[5] दृष्ट्वा ततो लज्जां समाययौ ।
इत्याशां नैव कुर्वीत[6] धीमान्भावेषु भाविषु ॥ ८ ॥
श्रुत्वेति[7] ब्राह्मणीवाक्यं तूष्णीमासीद्द्विजः क्षणम्[8] ।

घटाख्यायिका ॥

जाते ततः सुते विप्रः कदाचिन्निर्गतो गृहात् ॥ ९ ॥
रक्षार्थं नकुलं[9] धृत्वा पुत्रस्य गृहपोषितम्[10] ।
अथ सर्पं महाभोगं बालहिंसार्थमुत्थितम् ॥ १० ॥

---

1) B. कृत्वा. 2) B. तस्मिस्तनृपानाय. 3) B. लक्कुटैर्गृहि॰.
4) B. लगुणाक्षेपैर्घ॰. 5) B. भग्नसक्तुघटं. 6) B. क्रुवीत.
7) B. शृत्वेति. 8) B. कृष्णीमसीद्द्विजः (sic) क्षणां.
9) B. नक्कुलं. 10) B. गृहयोषितं.

नकुलः स्वरक्तशः कृत्वा रक्ताक्तो निर्ययौ गृहात् ।
तमभ्येत्य द्विजो दृष्ट्वा शिशुं मत्वा हतं सुतम् ॥ ११ ॥
अधोमुखेन कोपान्धो जघान नकुलं त्वरात् ।
गेहं प्रविश्य निहतं वीक्ष्य सर्पं भयंकरम् ॥ १२ ॥
स्थितं च बालकं स्वस्थं शुशोचानुशयाकुलः ।

H दृष्ट्वा

असम्यग्वीक्षितं [illegible] पण्डितो नानुवर्तते ॥ १३ ॥
अनुकारात्परिभवं याति नापितवन्नरः ।

H कृत्वी

वणिक्[illegible]णाधनो ऽपश्यत्स्वप्ने भिक्षुत्रयं पुरा ॥ १४ ॥
तैश्च स व्याहृतः सो ऽस्मान्हत्वा द्रविणमाप्स्यसि ।
स प्रबुद्धो वणिक्प्रातः दृष्ट्वा भिक्षुत्रयं पुरः ॥ १५ ॥
अताडयत्ताडिताश्च बभूवुर्धनराशयः ।
तद्दृष्टं नापितो दृष्ट्वा वणिग्वेश्मनि दुर्मतिः ॥ १६ ॥
धनार्थी स्वगृहं गत्वा जघान किल भिक्षुकान् ।
तं भिक्षुकवधाद्राजा निजग्राह नापितम् ॥ १७ ॥

H अस्त्यनालोच्य कार्येषु 8)

~~[illegible]~~ प्रवृत्तिर्दुःखकारणम् ।
नापिताख्यायिका ॥
एवं मतिमतामस्ति तिरश्चामपि कौशलम् ॥ १८ ॥

[॥ इति क्षेमेन्द्रविरचितबृहत्कथामञ्जर्यन्तर्गतपञ्चतन्त्रसारः समाप्तः ॥]

1) B. नकुलः. 2) B. निर्ययौ गृहात्. 3) B. मृत्वा हते.
4) B. असम्य[illegible]क्षिते दृष्टुं पंडितो नानुवर्त्तते.
5) B. अ[illegible]रात्परिभवे. 6) B. व्याहतस्सो ऽस्मान्हत्वा.
7) B. वणिक्प्रातः दृ. ~~[illegible]~~ 8) B. अत्यनालोच्यकार्येषु.

N कृवी

स शुश्राव[1] वृषस्योग्र शृङ्गाघात~~स्फु~~टे तटे[2]।

टांकारनादमुरवरं[3] हुंकारनिबिडध्वनिम्[4]॥ ७॥

श्रुत्वा तदुग्रनिनदं विमर्शस्थगितक्रमः[4a]।

स तस्थौ ~~फुल्लरोमाञ्चपी~~नलाङ्गूलपल्लवः[5]॥ ८॥ H फुल्लरोमाञ्चैः पी

करटो दमनश्चैव सचिवौ तस्य जम्बुकौ।

दूरतश्चित्तसंक्षोभं विलोक्य स्वैरमूचतुः॥ ९॥

पूर्वसंस्कारयोगेन सत्वान्मु[5a]निवरेण वा।

संस्फुटोच्चरति प्रायः पशूनामपि भारती[6]॥ १०॥

ततोऽब्रवीद्दमनकः[7] सखे किमयमीश्वरः।

अदृष्टशब्दमात्रेण क्षोभाकुल इवेक्ष्यते॥ ११॥

तच्छ्रुत्वा धीमतां धुर्यो हसन्करटकोऽब्रवीत्।

निरर्थचिन्तायोगेन[8] किं प्रयोजनमावयोः॥ १२॥

अप्रयोजनकर्ता यः ~~सर्वथा दुःख~~भाजनम्[9]। H स भवेद्दुःख

अकार्यदुर्ग्रहग्रस्तः[10] ~~कीलोत्पाटीव~~ वानरः[11]॥ १३॥ H कीलाकर्षीव

---

1) B. शुश्राव. 2) ~~P. वृषस्योग्रशृंगाघातस्फुटे तटे. 3) P. टंकारस्मरं~~ B. वृषस्योग्रं शृंगाघ्यातं स्फुटं तटे. 3) B. °मुरवरं, P. टंकार°. 4) B. und P. °निविड°. 4a) B. विषमं स्थगित°. 5) P. °रोमाञ्चपीन°. 5a) B. सत्वान्मु°.

~~[illegible]~~ 6) P. स्फुरत्येव मतिः प्रायः पशूभवति भारती, ~~[illegible]~~ 7) P. तत्राब्रवी°. 8) P. °चिन्तावेशेन. 9) P. स्युः प्रयोजनकर्तारः सर्वे दुःखस्य भाजनं, ~~Vgl. Panc.~~ B. hat सर्वथा ~~[illegible]~~ statt स भवेत्.

~~स एव निधनं याति कीलोत्पाटीव वानरः॥~~

10) P. अकार्यकृद्दण्डग्रस्तः. 11) ~~[illegible]~~ ~~B. hat कीलाकर्षकवानरः~~ B. कीलाकर्षकवानरः, P. कीलोत्पाटीव वानरः.

